चौखम्बा स्तोत्र ग्रन्थमाला
१०

# ॥ श्रीकृष्णसहस्रनामस्तोत्रम् ॥

(नामावलीसहितम्)

चौखम्बा संस्कृत प्रतिष्ठान : दिल्ली

मूल्य १०.००

॥ श्रीरस्तु ॥

# ॥ श्रीकृष्णसहस्रनामस्तोत्रम् ॥

## ( नामावळीसहितम् )





चौखम्बा संस्कृत प्रतिष्ठान

३८ यू. ए., बंगलो रोड, जवाहरनगर

दिल्ली ११०००७

|| श्रीः ||

# || श्रीकृष्णाष्टोत्तरशतनामस्तोत्रम् ||



श्रीकृष्णः कमलानाथो वासुदेवस्सनातनः ।
वसुदेवात्मजः पुण्यो लीलामानुषविग्रहः ॥ १
श्रीवत्सकौस्तुभधरो यशोदावत्सलो हरिः ।
चतुर्भुजात्तचक्रासिगदाशङ्खाद्युदायुधः ॥ २
देवकीनन्दनश्श्रीशो नन्दगोपप्रियात्मजः ।
यमुनावेगसंहारी बलभद्रप्रियानुजः ॥ ३

पूतनाजीवितहरश्शकटासुरभञ्जनः ।
नन्दव्रजजनानन्दी सच्चिदानन्दविग्रहः ॥ ४
नवनीतविलिप्ताङ्गो नवनीतनटोऽनघः ।
नवनीतनवाहारो मुचिकुन्दप्रसादकः ॥ ५
षोडशस्त्रीसहस्रेशस्त्रिभङ्गी मधुराकृतिः ।
शुकवागमृताब्धीन्दुर्गोविन्दो योगिनां पतिः ॥ ६
वत्सवाटचरोऽनन्तो धेनुकासुरभञ्जनः ।
तृणीकृततृणावर्तो यमलार्जुनभञ्जनः ॥ ७

उत्तालतालभेत्ता च तमालश्यामलाकृतिः ।
गोपगोपीश्वरो योगी कोटिसूर्यसमप्रभः ॥ ८
इळापतिः परंज्योतिर्यादवेन्द्रो यदूद्वहः ।
वनमाली पीतवासाः पारिजातापहारकः ॥ ९
गोवर्धनाचलोद्धर्ता गोपालस्सर्वपालकः ।
अजो निरञ्जनः कामजनकः कञ्जलोचनः ॥ १०
मधुहा मधुरानाथो द्वारकानायको बली ।
बृन्दावनान्तसञ्चारी तुलसीदामभूषणः ॥ ११

स्यमन्तकमणेर्हर्ता नरनारायणात्मकः ।

कुब्जाकृष्णाम्बरधरो मायी परमपूरुषः ॥ १२
मुष्टिकासुरचाणूरमल्लयुद्धविशारदः ।
संसारवैरी कंसारिर्मुरारिर्नरकान्तकः ॥ १३
अनादिब्रह्मचारी च कृष्णाव्यसनकर्शकः ।
शिशुपालशिरश्छेत्ता दुर्योधनकुलान्तकः ॥ १४
विदुराक्रूरवरदो विश्वरूपप्रदर्शकः ।
सत्यवाक्सत्यसङ्कल्पस्सत्यभामारतो जयी ॥ १५
सुभद्रापूर्वजो विष्णुर्भीष्ममुक्तिप्रदायकः ।

जगद्गुरुर्जगन्नाथो वेणुनादविशारदः ॥ १६
वृषभासुरविध्वंसी बाणासुरकरान्तकः ।
युधिष्ठिरप्रतिष्ठाता बर्हिबर्हावतंसकः ॥ १७
पार्थसारथिरव्यक्तो गीतामृतमहोदधिः ।
कालीयफणिमाणिक्यरञ्जितश्रीपदाम्बुजः ॥ १८
दामोदरो यज्ञभोक्ता दानवेन्द्रविनाशकः ।
नारायणः परं ब्रह्म पन्नगाशनवाहनः ॥ १९
जलक्रीडासमासक्तगोपीवस्त्रापहारकः ।
पुण्यश्लोकस्तीर्थपादो वेदवेद्यो दयानिधिः ॥ २०

सर्वतीर्थात्मकस्सर्वग्रहरूपी परात्परः ।
एवं श्रीकृष्णदेवस्य नाम्नामष्टोत्तरं शतम् ॥ २१
कृष्णनामामृतं नाम परमानन्दकारकम् ।
अत्युपद्रवदोषघ्नं परमायुष्यवर्धनम् ॥ २२

इति श्रीकृष्णाष्टोत्तरशतनामस्तोत्रं सम्पूर्णम् ॥

॥ श्रीः ॥

# ॥ श्रीकृष्णाष्टोत्तरशतनामावळिः ॥



ओं श्रीकृष्णाय नमः

कमलानाथाय

वासुदेवाय

सनातनाय

ओं वसुदेवात्मजाय नमः

पुण्याय

लीलामानुषविग्रहाय

श्रीवत्सकौस्तुभधराय

ओं यशोदावत्सलाय नमः
हरये १०
चतुर्भुजात्तचक्रासिगदाशङ्खाद्यु-
दायुधाय
देवकीनन्दनाय
श्रीशाय
नन्दगोपप्रियात्मजाय
यमुनावेगसंहारिणे

ओं बलभद्रप्रियानुजाय नमः
पूतनाजीवितहराय
शकटासुरभञ्जनाय
नन्दव्रजजनानन्दिने
सच्चिदानन्दविग्रहाय २०
नवनीतविलिप्ताङ्गाय
नवनीतनटाय
अनघाय

नवनीतनवाहाराय

मुचिकुन्दप्रसादकाय

षोडशस्त्रीसहस्त्रेशाय

त्रिभङ्गिने

मधुराकृतये

शुकवागमृताब्धीन्दवे

गोविन्दाय ३०

योगिनां पतये

वत्सवाटचराय

अनन्ताय

धेनुकासुरभञ्जनाय

तृणीकृततृणावर्ताय

यमलार्जुनभञ्जनाय

उत्तालतालभेत्रे तमालश्यामला-
कृतये

गोपगोपीश्वराय

योगिने

कोटिसूर्यसमप्रभाय ४०

ओं इलापतये नमः
परंज्योतिषे
यादवेन्द्राय
यदूद्वहाय
वनमालिने
पीतवाससे
पारिजातापहारकाय
गोवर्धनाचलोद्धर्त्रे

ओं गोपालाय नमः
सर्वपालकाय ५०
अजाय
निरञ्जनाय
कामजनकाय
कञ्जलोचनाय
मधुघ्ने
मथुरानाथाय

द्वारकानायकाय
बलिने
बृन्दावनान्तसञ्चारिणे
तुलसीदामभूषणाय ६०
स्यमन्तकमणेर्हर्त्रे
नरनारायणात्मकाय
कुब्जाकृष्णांबरधराय
मायिने
परमपूरुषाय

मुष्टिकासुरचाणूरमल्लयुद्धविशा-
रदाय
संसारवैरिणे
कंसारये
मुरारये
नरकान्तकाय ७०
अनादिब्रह्मचारिणे
कृष्णाव्यसनकर्शनाय
शिशुपालशिरश्छेत्रे

ओं दुर्योधनकुलान्तकाय नमः
विदुराक्रूरवरदाय
विश्वरूपप्रदर्शकाय
सत्यवाचे
सत्यसङ्कल्पाय
सत्यभामारताय
जयिने ८०
सुभद्रापूर्वजाय

ओं जिष्णवे नमः
भीष्ममुक्तिप्रदायकाय
जगद्गुरवे
जगन्नाथाय
वेणुनादविशारदाय
वृषभासुरविध्वंसिने
बाणासुरकरान्तकाय
युधिष्ठिरप्रतिष्ठात्रे

बर्हिबर्हावतंसकाय ९०
पार्थसारथये
अव्यक्ताय
गीतामृतमहोदधये
कालीयफणिमाणिक्यमण्डित-
श्रीपदाम्बुजाय
दामोदराय
यज्ञभोक्त्रे
दानवेन्द्रविनाशकाय
नारायणाय
परब्रह्मणे
पन्नगाशनवाहनाय १००
जलक्रीडासमासक्तगोपीवस्त्राप-
हारकाय
पुयण्श्लोकाय
तीर्थपादाय
वेदवेद्याय
दयानिधये

ओं सर्वतीर्थात्मकाय सर्वग्रहरूपिणे

ओं परात्पराय नमः १०८

॥ श्रीकृष्णाष्टोत्तरशतनामावळिः समाप्ता ॥

---

॥ श्रीः ॥

# ॥ श्रीकृष्णसहस्रनामस्तोत्रम् ॥

---

श्रीमद्रुक्मिममहीपालवंशरक्षामणिः स्थिरः ।
राजा हरिहरः क्षोणीं रक्षत्यम्बुधिमेखलाम् ॥ १

स राजा सर्वतन्त्रज्ञः समभ्यर्च्य वरप्रदम् ।
देवं श्रियः पतिं स्तुत्या समस्तौद्वेदवेदितम् ॥ २

तस्य हृष्टाशयः स्तुत्या विष्णुर्गोपाङ्गनावृतः ।

स पिञ्छश्यामलं रूपं पिञ्छोत्तंसमदर्शयत् ॥ ३

स पुनः स्वात्मविन्यस्तचित्तं हरिहरं नृपम् ।
अभिषिच्य कृपावर्षैरभाषत कृताञ्जलिम् ॥ ४

श्रीभगवानुवाच—

मामवेहि महाभाग ! कृष्णं कृत्यविदां वर ।
पुरः स्थितोऽस्मि त्वद्भक्त्या पूर्णास्सन्तु मनोरथाः ॥ ५

संरक्षणाय शिष्टानां दुष्टानां शिक्षणाय च ।
समृद्ध्यै वेदधर्माणां ममांशस्त्वमिहोदितः ॥ ६

राजनामसहस्रेण रामो नाम्नां स्तुतस्त्वया ।

सोऽहं सर्वविदो तस्मात्प्रसन्नोऽस्मि विशेषतः ॥ ७

मामपि त्वं महाभाग मदीयचरितात्मना ।

संश्रीणय सहस्रेण नाम्नां सर्वार्थदायिनाम् ॥ ८

पराशरेण मुनिना व्यासेनाम्नायदर्शिना ।

स्वात्ममाजा शुकेनापि सूक्तेऽप्येतद्विभावितम् ॥ ९

तं हि त्वमनुसन्धेहि सहस्रशिरसं प्रभुम् ।

दद्यास्येषु मया न्यस्तं सहस्रं रक्षयिष्यति ॥ १०

इदं विश्वहितार्थाय रसनारङ्गगोचरम् ।

प्रकाशय त्वं मेदिन्यां परमागमसम्मतम् ॥ ११

इदं शठाय मूर्खाय नास्तिकाय विकीर्णिने ।
असूयिनेऽहितायापि न प्रकाश्यं कदाचन ॥ १२
विवेकिने विशुद्धाय वेदमार्गानुसारिणे ।
आस्तिकायात्मनिष्ठाय स्वात्मन्यनुस्मृतोदयम् ॥ १३
कृष्णनामसहस्रं वै कृतधीरेतदीरयेत् ।

ॐ अस्य श्रीकृष्णसहस्रनामस्तोत्रमन्त्रस्य पराशरऋषिः, अनुष्टुप्छन्दः, श्रीकृष्णः परमात्मा देवता, श्रीकृष्णेति बीजम्, श्रीवल्लभेति शक्तिः, शार्ङ्गीति कीलकं, श्रीकृष्णप्रीत्यर्थे जपे विनियोगः ॥

अथ न्यासः ॥ पराशराय ऋषये नम इति शिरसि, अनुष्टुप् छन्दसे नम इति मुखे, गोपालकृष्णदेवतायै नम इति हृदये, श्रीकृष्णाय बीजाय नम इति गुह्ये, श्रीवल्लभाय शक्त्यै नम इति पादयोः, शार्ङ्गधराय कीलकाय नम इति सर्वाङ्गे ॥ अथ करन्यासः ॥ श्रीकृष्ण इत्यारभ्य शूरवंशैकधीरित्यन्तानि अङ्गुष्ठाभ्यां नमः । शौरिरित्यारभ्य स्वभासोद्भासितव्रज इत्यन्तानि तर्जनीभ्यां नमः । कृतात्मविद्याविन्यास इत्यारभ्य प्रस्थानशकटारूढ इति मध्यमाभ्यां नमः, बृन्दावनकृतालय इत्यारभ्य मधुराजनवीक्षित इत्यानामिकाभ्यां नमः, रजक-



प्रतिघातक इत्यारभ्य द्वारकापुरकल्पन इति कनिष्ठिकाभ्यां नमः,

द्वारकानिलय इत्यारभ्य पराशर इति करतलकरपृष्ठाभ्यां नमः, एवं हृदयादिन्यासः ॥

ध्यानम्—

केषांचित्प्रेमपुंसां विगलितमनसां बाललीलाविलासं
केषांगोपाललीलाङ्कितरसिकतनुर्वेणुवाद्येन देवम् ।
केषां वामासमाजे जनितमनसिजो दैत्यदर्पापहैवं
ज्ञात्वा भिन्नाभिलाषं स जयति जगतामीश्वरस्तादृशोऽभूत् ॥ १
क्षीराब्धौ कृतसंस्तवस्सुरगणैर्ब्रह्मादिभिः पण्डितैः

प्रोद्भूतो वसुदेवसद्मनि मुदा चिक्रीड यो गोकुले ।
कंसध्वंसकृते जगाम मधुरां सारामसद्वारकां
गोपालोऽखिलगोपिकाजनसखः पायादपायात्स नः ॥ २

फुल्लेन्दीवरकान्तिमिन्दुवदनं बर्हावतंसप्रियं
श्रीवत्साङ्कमुदारकौस्तुभधरं पीताम्बरं सुन्दरम् ।
गोपीनां नयनोत्पलार्चिततनुं गोगोपसङ्घावृतं
गोविन्दं कलवेणुवादनरतं दिव्याङ्गभूषं भजे ॥ ३

श्लोक—



कृष्णश्श्रीवल्लभश्शार्ङ्गी विष्वक्सेनस्स्वसिद्धिदः ।

क्षीरोदधामा व्यूहेशश्शेषशायी जगन्मयः ॥ १
भक्तिगम्यस्त्रयीमूर्तिर्भारार्तवसुधास्तुतः ।
देवदेवो दयासिन्धुर्देवदेवशिखामणिः ॥ २
सुखभावस्सुखाधारो मुकुन्दो मुदिताशयः ।
अविक्रियः क्रियामूर्तिरध्यात्मस्वस्वरूपवान् ॥ ३
शिष्टाभिलक्ष्यो भूतात्मा धर्मत्राणार्थचेष्टितः ।
अन्तर्यामी कलारूपः कालावयवसाक्षिकः ॥ ४
वसुधायासहरणो नारदप्रेरणोन्मुखः ।

प्रभूष्णुर्नारदोद्गीतो लोकरक्षापरायणः ॥ ५
रौहिणेयकृतानन्दो योगज्ञाननियोजकः ।
महागुहान्तर्निक्षिप्तः पुराणवपुरात्मवान् ॥ ६
शूरवंशैकधीश्शौरिः कंसशङ्काविषादकृत् ।
वसुदेवोल्लसच्छक्तिर्देवक्यष्टमगर्भगः ॥ ७
वसुदेवसुतश्श्रीमान्देवकीनन्दनो हरिः ।
आश्चर्यबालश्श्रीवत्सलक्ष्मवक्षाश्चतुर्भुजः ॥ ८
स्वभावोत्कृष्टसद्भावः कृष्णाष्टम्यन्तसम्भवः ।

प्राजापत्यर्क्षसम्भूतो निशीथसमयोदितः ॥ ९

शङ्खचक्रगदापद्मपाणिः पद्मनिभेक्षणः ।
किरीटी कौस्तुभोरस्कः स्फुरन्मकरकुण्डलः ॥ १०
पीतवासा घनश्यामः कुञ्चिताञ्चितकुन्तलः ।
सुव्यक्तव्यक्ताभरणः सूतिकागृहभूषणः ॥ ११
कारागारान्धकारघ्नः पितृप्राग्जन्मसूचकः ।
वसुदेवस्तुतः स्तोत्रं तापत्रयनिवारणः ॥ १२
निरवद्यः क्रियामूर्तिर्न्यायवाक्यनियोजकः ।
अदृष्टचेष्टः कूटस्थो धृतलौकिकविग्रहः ॥ १३

महर्षिमानसोल्लासो महीमङ्गळदायकः ।
सन्तोषितसुरव्रातः साधुचित्तप्रसादकः ॥ १४
जनकोपायनिर्देष्टा देवकीनयनोत्सवः ।
पितृपाणिपरिष्कारो मोहितागाररक्षकः ॥ १५
स्वशक्त्युद्घाटिताशेषकपाटः पितृवाहकः ।
शेषोरगफणाच्छत्रश्शेषोक्ताख्यासहस्रकः ॥ १६
यमुनापूरविध्वंसी स्वभासोद्भासितव्रजः ।
कृतात्मविद्याविन्यासो योगमायाग्रसम्भवः ॥ १७
दुर्गानिवेदितोद्भावो यशोदातल्पशायकः ।

नन्दगोपोत्सवस्फूर्तिर्व्रजानन्दकरोदयः ॥ १८
सुजातजातकर्मश्रीगोपीभद्रोक्तिनिर्वृतः ।
अलीकनिद्रोपगमः पूतनास्तनपीडनः ॥ १९
स्तन्यात्तपूतनाप्राणः पूतनाक्रोशकारकः ।
विन्यस्तरक्षागोधूलिर्यशोदाकरलालितः ॥ २०
नन्दाघ्रातशिरोमध्यः पूतनासुगतिप्रदः ।
बालः पर्यङ्कनिद्रालुर्मुखार्पितपदाङ्गुलिः ॥ २१
अञ्जनस्निग्धनयनः पर्यायाङ्कुरितस्मितः ।

लीलाक्षस्तरलालोकश्शकटासुरभञ्जनः ॥ २२
द्विजोदितस्वस्त्ययनो मन्त्रपूतजलाप्लुतः ।
यशोदोत्सङ्गपर्यङ्को यशोदामुखवीक्षकः ॥ २३
यशोदास्तन्यमुदितस्तृणावर्तादिदुस्सहः ।
तृणावर्तासुरध्वंसी मातृविस्मयकारकः ॥ २४
प्रशस्तनामकरणो जानुचङ्क्रमणोत्सुकः ।
व्यालम्बिचूलिकारत्नो घोषगोपप्रहर्षणः ॥ २५
स्वमुखप्रतिबिम्बार्थी ग्रीवाव्याघ्रनखोज्ज्वलः ।
पङ्कानुलेपरुचिरो मांसलोरुकटीतटः ॥ २६

घृष्टजानुकरद्वन्द्वः प्रतिबिम्बानुकारकृत् ।
अव्यक्तवर्णवाग्वृत्तिःस्मितलक्ष्यरदोद्गमः ॥ २७
धात्रीकरसमालम्बी प्रस्खलच्चित्रचङ्क्रमः ।
अनुरूपवयस्याढ्यश्चारुकौमारचापलः ॥ २८
वत्सपुच्छसमाकृष्टो वत्सपुच्छविकर्षणः ।
विस्मारितान्यव्यापारो गोपगोपीमुदावहः ॥ २९
अकालवत्सनिर्मोक्ता व्रजव्याक्रोशसुस्मितः ।
नवनीतमहाचोरो दारकाहारदायकः ॥ ३०

पीठोलूखलसोपानः क्षीरभाण्डविभेदनः ।
शिक्यभाण्डसमाकर्षी ध्वान्तागारप्रवेशकृत् ॥ ३१
भूषारत्नप्रकाशाढ्यो गोप्युपालम्भभर्त्सितः ।
परागधूसराकारो मृद्भक्षणकृतेक्षणः ॥ ३२
बालोक्तमृत्कथारम्भो मित्रान्तर्गूढविग्रहः ।
कृतसन्त्रासलोलाक्षो जननीप्रत्ययावहः ॥ ३३
मातृदृश्यात्तवदनो वक्त्रलक्ष्यचराचरः ।
यशोदालालितस्वात्मा स्वयं स्वाच्छन्द्यमोहनः ॥ ३४

सवित्रीस्नेहसंश्लिष्टः सवित्रीस्तनलोलुपः ।

नवनीतार्थनाग्रहो नवनीतमहाशनः ॥ ३५
मृषाकोपप्रकम्पोष्ठो गोष्ठाङ्गणविलोकनः ।
दधिमन्थघटीभेत्ता किङ्किणीक्वाणसूचितः ॥ ३६
हैयङ्गवीनरसिको मृषाश्रुश्चौर्यशङ्कितः ।
जननीश्रमविज्ञाता दामबन्धनियन्त्रितः ॥ ३७
दामाकल्पश्चलापाङ्गो गाढोलूखलबन्धनः ।
आकृष्टोलूखलोऽनन्तः कुबेरसुतशापवित् ॥ ३८
नारदोक्तिपरामर्शी यमलार्जुनभञ्जनः ।

धनदात्मजसङ्कृष्टो नन्दमोचितबन्धनः ॥ ३९
बालकोद्गीतनिरतो बाहुक्षेपोदितप्रियः ।
आत्मज्ञो मित्रवशगो गोपीगीतगुणोदयः ॥ ४०
प्रस्थानशकटारूढो बृन्दावनकृतालयः ।
गोवत्सपालनैकाग्रो नानाक्रीडापरिच्छदः ॥ ४१
क्षेपणीक्षेपणप्रीतो वेणुवाद्यविशारदः ।
वृषवत्सानुकरणो वृषध्वानविडम्बनः ॥ ४२
नियुद्धलीलासंहृष्टः कूजानुकृतकोकिलः ।
उपात्तहंसगमनस्सर्वजन्तुरुतानुकृत् ॥ ४३

भृङ्गानुकारी दध्यन्नचोरो वत्सपुरस्सरः ।
बली बकासुरग्राही बकतालुप्रदाहकः ॥ ४४
भीतगोपार्भकाहूतो बकचञ्चुविदारणः ।
बकासुरारिर्गोपालो बालो बालाद्भुतावहः ॥ ४५
बलभद्रसमाश्लिष्टः कृतक्रीडानिलायनः ।
क्रीडासेतुनिधानज्ञः प्लवङ्गोत्प्लवनोऽद्भुतः ॥ ४६
कन्दुकक्रीडनो लुप्तनन्दादिभववेदनः ।
सुमनोऽलङ्कृताशिराः स्वादुस्निग्धान्नशिक्यभृत् ॥ ४७

गुञ्जाप्रालम्बनच्छन्नः पिञ्छैरलकवेषकृत् ।
वन्याशनप्रियश्शृङ्गरवाकारितवत्सकः ॥ ४८
मनोज्ञपल्लवोत्तंसपुष्पस्वेच्छात्तषट्पदः ।
मञ्जुशिञ्जितमञ्जीरचरणः करकङ्कणः ॥ ४९
अन्योन्यशासनः क्रीडापटुः परमकैतवः ।
प्रतिध्वानप्रमुदितः शाखाचतुरचङ्क्रमः ॥ ५०
अघदानवसंहर्ता व्रजविघ्नविनाशनः ।
व्रजसञ्जीवनश्श्रेयोनिधिर्दानवमुक्तिदः ॥ ५१
कालिन्दीपुलिनासीनस्सहभुक्तव्रजार्भकः ।

कक्षाजठरविन्यस्तवेणुर्वल्लवचेष्टितः ॥ ५२
भुजसन्ध्यन्तरन्यस्तशृङ्गवेत्रश्शुचिस्मितः ।
वामपाणिस्थदध्यन्नकबळः कलभाषणः ॥ ५३
अङ्गुळ्यन्तरविन्यस्तफलः परमपावनः ।
अदृश्यतर्णकान्वेषी वल्लवार्भकभीतिहा ॥ ५४
अदृष्टवत्सपव्रातो ब्रह्मविज्ञातवैभवः ।
गोवत्सवत्सपान्वेषी विराट्पुरुषविग्रहः ॥ ५५
स्वसङ्कल्पानुरूपार्थो वत्सवत्सपरूपधृक् ।

यथावत्साक्रियारूपो यथास्थाननिवेशनः ॥ ५६
यथाव्रजार्भकाकारो गोगोपीस्तन्यपस्सुखी ।
चिराद्बलोहितो दान्तो ब्रह्मविज्ञातवैभवः ॥ ५७
विचित्रशक्तिर्व्यालीन सृष्टगोवत्सवत्सपः ।
ब्रह्मत्रपाकरो धातृस्तुवस्सर्वार्थसाधकः ॥ ५८
ब्रह्म ब्रह्ममयोऽव्यक्तस्तेजोरूपस्सुखात्मकः ।
निरुक्तं व्याकृतिर्व्यक्तो निरालम्बनभावनः ॥ ५९
प्रभविष्णुरतन्त्रीको देवपक्षार्थरूपधृक् ।
अकामस्सर्ववेदादिरणीयस्थूलरूपवान् ॥ ६०

व्यापी व्याप्यः कृपाकर्ता विचित्राचारसम्मतः ।
छन्दोमयः प्रधानात्मा मूर्तामूर्तिद्वयाकृतिः ॥ ६१
अनेकमूर्तिरक्रोधः परः प्रकृतिरक्रमः ।
सकलावरणोपेतस्सर्वदेवो महेश्वरः ॥ ६२
महाप्रभावनः पूर्ववत्सवत्सपदर्शकः ।
कृष्णयादवगोपालो गोपालोकनहर्षितः ॥ ६३
स्मितेक्षाहर्षितब्रह्मा भक्तवत्सलवाक्प्रियः ।
ब्रह्मानन्दाश्रुधौताङ्घ्रिलीलावैचित्र्यकोविदः ॥ ६४

बलभद्रैकहृदयो नामाकारितगोकुलः ।
गोपालबालको भव्यो रज्जुयज्ञोपवीतवान् ॥ ६५
वृक्षच्छायाहताशान्तिर्गोपोत्सङ्गोपबर्हणः ।
गोपसंवाहितपदो गोपव्यजनवीजितः ॥ ६६
गोपगानसुखोन्निद्रः श्रीदामार्जितसौहृदः ।
सुनन्दसुहृदेकात्मा सुबलप्राणरञ्जनः ॥ ६७
तालीवनकृतक्रीडो बलपातितधेनुकः ।
गोपीसौभाग्यसम्भाव्यो गोधूलिच्छुरितालकः ॥ ६८
गोपीविरहसन्तप्तो गोपिकाकृतमज्जनः ।

प्रलम्बबाहुरुत्फुल्लपुण्डरीकावतंसकः ॥ ६९
विलासललितस्मेरगर्भलीलावलोकनः ।
स्रग्भूषणानुलेपाढ्यो जनन्युपहृतान्नभुक् ॥ ७०
वरशय्याशयो राधाप्रेमसल्लापनिर्वृतः ।
यमुनातटसञ्चारी विषार्तव्रजहर्षदः ॥ ७१
कालियक्रोधजनकः वृद्धाहिकुलवेष्टितः ।
कालियाहिफणारङ्गनटः कालियमर्दनः ॥ ७२
नागपत्नीस्तुतिप्रीतो नानावेषसमृद्धिकृत् ।

अविश्वक्तहृद्गात्मेशः स्वहृद्गात्मस्तुतिप्रियः ॥ ७३
सर्वेश्वरस्सर्वगुणः प्रसिद्धस्सर्वसात्वतः ।
अकुण्ठधामा चन्द्रार्कदृष्टि राकाशनिर्मलः ॥ ७४
अनिर्देश्यगतिर्नागवनितापतिभैक्ष्यदः ।
स्वाङ्घ्रिमुद्राङ्कनागेन्द्रमूर्धा कालियसंस्तुतः ॥ ७५
अभयो विश्वतश्चक्षुः स्तुतोत्तमगुणः प्रभुः ।
अहमात्मा मरुत्प्राणः परमात्मा द्युशीर्षवान् ॥ ७६
नागोपायनहृष्टात्मा ह्रदोत्सारितकालियः ।
बलभद्रसुखालापो गोपालिङ्गननिर्वृतः ॥ ७७

दावाग्निभीतगोपालगोप्ता दावाग्निनाशनः ।
नयनाच्छादनक्रीडालम्पटो नृपचेष्टितः ॥ ७८
काकपक्षधरस्सौम्यो बलवाहककेलिमान् ।
बलघातितदुर्धर्षप्रलम्बो बलवत्सलः ॥ ७९
मुञ्जाटव्यग्निशमनः प्रावृट्कालविनोदवान् ।
शिलान्यस्तान्नभृद्दैत्यसंहर्ता शाद्वलासनः ॥ ८०
सदाप्तगोपिकोद्गीतः कर्णिकारावतंसकः ।
नटवेषधरः पद्ममालाङ्को गोपिकावृतः ॥ ८१

गोपीमनोहरापाङ्गो वेणुवादनतत्परः ।
विन्यस्तवदनाम्भोजश्चारुशब्दकृताननः ॥ ८१

बिम्बाधरार्पितोदारवेणुर्विश्वविमोहनः ।
व्रजसंवर्णितश्राव्यवेणुनादश्श्रुतिप्रियः ॥ ८३

गोगोपगोपीजन्मेप्सुर्ब्रह्मेन्द्राद्यभिवन्दितः ।
गीतस्नुतिसरित्पूरो नादनर्तितबर्हिणः ॥ ८४

रागपल्लवितस्थाणुर्गीतानमितपादपः ।
विस्मारिततृणग्रासमृगो मृगविलोभितः ॥ ८५

व्याघ्रादिहिंस्रसहजवैरहर्ता सुगायनः ।

गाढोदीरितगोबृन्दप्रेमोत्कर्णिततर्णकः ॥ ८६
निष्पन्दयानब्रह्मादिवीक्षितो विश्ववन्दितः ।
शाखोत्कर्णशकुन्तौघश्छत्रायितवलाहकः ॥ ८७
प्रसन्नः परमानन्दश्चित्रायितचराचरः ।
गोपिकामदनो गोपीकुचकुङ्कुममुद्रितः ॥ ८८
गोपिकन्याजलक्रीडाहृष्टो गोप्यंशुकापहृत् ।
स्कन्धारोपितगोपस्त्रीवासाः कुन्दनिभस्मितः ॥ ८९
गोपीनेत्रोत्पलशशी गोपिकायाचितांशुकः ।

गोपीनमस्क्रियादेष्टा गोप्येककरवन्दितः ॥ ९०
गोप्यञ्जलिविशेषार्थी गोपक्रीडाविलोभितः ।
शान्तवासस्फुरद्गोपीकृताञ्जलिरघापहः ॥ ९१
गोपीकेळिविलासार्थी गोपीसम्पूर्णकामदः ।
गोपस्त्रीवस्त्रदो गोपीचित्तचोरः कुतूहली ॥ ९२
बृन्दावनप्रियो गोपबन्धुर्यज्वान्नयाचिता ।
यज्ञेशो यज्ञभावज्ञो यज्ञपत्न्याभिवाञ्छितः ॥ ९३
मुनिपत्नीवितीर्णान्नतृप्तो मुनिवधूप्रियः ।

द्विजपत्न्यभिभावज्ञो द्विजपत्नीवरप्रदः ॥ ९४

प्रतिरुद्धसतीमोक्षप्रदो द्विजविमोहिता ।
मुनिज्ञानप्रदो यज्वस्तुतो वासवयागवित् ॥ ९५
पितृप्रोक्तक्रियारूपशक्रयागनिवारणः ।
शक्राऽमर्षकरश्शक्रवृष्टिप्रशमनोन्मुखः ॥ ९६
गोवर्धनधरो गोपगोबृन्दत्राणतत्परः ।
गोवर्धनगिरिच्छत्रचण्डदण्डभुजार्गळः ॥ ९७
सप्ताहविधृताद्रीन्द्रो मेघवाहनगर्वहा ।
भुजाग्रोपरिविन्यस्तक्ष्माधरक्ष्माभृदच्युतः ॥ ९८

स्वस्थानस्थापितगिरिर्गोपीदध्यक्षतार्चितः ।
सुमनस्सुमनोवृष्टिहृष्टो वासववन्दितः ॥ ९९
कामधेनुपयः पूराभिषिक्तस्सुरभिस्तुतः ।
धराङ्घ्रिरोषधीरोमा धर्मगोप्ता मनोमयः ॥ १००
ज्ञानयज्ञप्रियश्शास्त्रनेत्रस्सर्वार्थसारथिः ।
ऐरावतकरानीतवियद्गङ्गाप्लुतो विभुः ॥ १०१
ब्रह्माभिषिक्तो गोगोप्ता सर्वलोकशुभंकरः ।
सर्ववेदमयो मग्ननन्दान्वेषिपितृप्रियः ॥ १०२
वरुणोदीरितापेक्षाकौतुको वरुणार्चितः ।

वरुणानीतजनको गोपज्ञातात्मवैभवः ॥ १०३
स्वर्लोकालोकसंहृष्टगोपवर्गत्रिवर्गदः ।
ब्रह्महृद्गोपितो गोपद्रष्टा ब्रह्मपदप्रदः ॥ १०४
शरच्चन्द्रविहारोत्कः श्रीपतिर्वशको क्षमः ।
भयापहो भर्तृरुद्धगोपिकाध्यानगोचरः ॥ १०५
गोपिकानयनास्वाद्यो गोपीनर्मोक्तिनिर्वृतः ।
गोपिकामानहरणो गोपिकाशतयूथपः ॥ १०६
वैजयन्तीस्रगाकल्पो गोपिकामानवर्धनः ।

गोपकान्तासुनिर्दिष्टा कान्तो मन्मथमन्मथः ॥ १०७
स्वात्मास्यदत्तताम्बूलः फलितोत्कृष्टयौवनः ।
वल्लवीस्तनसक्ताक्षो वल्लवीप्रेमचालितः ॥ १०८
गोपीचेलांचलासीनो गोपीनेत्राब्जषट्पदः ।
रासक्रीडासमासक्तो गोपीमण्डलमण्डनः ॥ १०९
गोपीहेममणिश्रेणिमध्येन्द्रमणिरुज्जवलः ।
विद्याधरेन्दुशापघ्नश्शङ्खचूडशिरोहरः ॥ ११०
शङ्खचूडशिरोरत्नसंप्रीणितबलोऽनघः ।
अरिष्टारिष्टकृद्दुष्टकेशिदैत्यनिषूदनः ॥ १११

सरसस्सस्मितमुखस्सुस्थिरो विरहाकुलः ।
सङ्कर्षणार्पितप्रीतिरक्रूरध्यानगोचरः ॥ ११२
अक्रूरसंस्तुतो गूढो गुणवृत्त्युपलक्षितः ।
प्रमाणगम्यस्तन्मात्राऽवयवी बुद्धितत्परः ॥ ११३
सर्वप्रमाणप्रमधीस्सर्वप्रत्ययसाधकः ।
पुरुषश्च प्रधानात्मा विपर्यासविलोचनः ॥ ११४
मधुराजनसंवीक्ष्यो रजकप्रतिघातकः ।
विचित्राम्बरसंवीतो मालाकारवरप्रदः ॥ ११५

कुब्जावक्रत्वनिर्मोक्ता कुब्जायौवनदायकः ।
कुब्जाङ्गरागसुरभिः कंसकोदण्डखण्डनः ॥ ११६

धीरः कुवलयापीडमर्दनः कंसभीतिकृत् ।
दन्तिदन्तायुधो रङ्गत्रासको मल्लयुद्धवित् ॥ ११७

चाणूरहंता कंसारिर्देवकीहर्षदायकः ।
वसुदेवपदानम्रः पितृबन्धविमोचनः ॥ ११८

उर्वीभयापहो भूप उग्रसेनाधिपत्यदः ।
आज्ञास्थितशचीनाथस्सुधर्मानयनक्षमः ॥ ११९

आद्यो द्विजातिसत्कर्ता शिष्टाचारप्रदर्शकः ।

सान्दीपनिकृताभ्यस्तविद्याभ्यासैकधीस्सुधीः ॥ १२०
गुर्वभीष्टक्रियादक्षः पश्चिमोदधिपूजितः ।
हतपञ्चजनप्राप्त पाञ्चजन्यो यमार्चितः ॥ १२१
धर्मराजजयानीतगुरुपुत्र उरुक्रमः ।
गुरुपुत्रप्रदश्शास्ता मधुराजसभासदः ॥ १२२
जामदग्न्यसमभ्यर्च्यो गोमन्तगिरिसंचरः ।
गोमन्तदावशमनो गरुडानीतभूषणः ॥ १२३
चक्राद्यायुधसंशोभी जरासन्धमदापहः ।

सृगालावनिपालघ्नस्सृगालात्मजराज्यदः ॥ १२४
विध्वस्तकालयवनो मुचुकुन्दवरप्रदः ।
आज्ञापितमहाम्भोधिद्वारकापुरकल्पनः ॥ १२५
द्वारकानिलयो रुक्मिमानहन्ता यदूद्वहः ।
रुचिरो रुक्मिणीजानिः प्रद्युम्नजनकः प्रभुः ॥ १२६
अपाकृतत्रिलोकार्तिरनिरुद्धपितामहः ।
अनिरुद्धपदान्वेषी चक्री गरुडवाहनः ॥ १२७
बाणासुरपुरीरोद्धा रक्षाज्वलनयन्त्रजित् ।
धूतप्रमथसंरम्भो जितमाहेश्वरज्वरः ॥ १२८

षट्चक्र शक्तिनिर्जेता भूतभेताळमोहकृत् ।
शम्भुत्रिशूलजिच्छम्भुजम्भणश्शंम्भुसंस्तुतः ॥ १२९
इन्द्रियात्मेन्दुहृदयस्सर्वयोगेश्वरेश्वरः ।
हिरण्यगर्भहृदयो मोहावर्तनिवर्तनः ॥ १३०
आत्मज्ञाननिधिर्मेधा कोशस्तन्मात्ररूपवान् ।
इन्द्रोऽग्निवदनः कालनामस्सर्वागमाध्वगः ॥ १३१
तुरीयसर्वधीसाक्षी द्वन्द्वारामात्मदूरगः ।
अज्ञातपारो वश्यश्रीरव्याकृतविहारवान् ॥ १३२

आत्मप्रदीपो विज्ञानमात्रात्मा श्रीनिकेतनः ।
बाणबाहुवनच्छेत्ता महेन्द्रप्रीतिवर्धनः ॥ १३३
अनिरुद्धनिरोधज्ञो जलेशाहृतगोकुलः ।
जलेशविजयी वीरस्सत्राजिद्रत्नयाचकः ॥ १३४
प्रसेनान्वेषणोद्युक्तो जाम्बवद्धृतरत्नदः ।
जितर्क्षराजतनयाहर्ता जाम्बवतीप्रियः ॥ १३५
सत्यभामाप्रियः कामश्शतधन्वशिरोहरः ।
कालिन्दीपतिरक्रूरबन्धुरक्रूररत्नदः ॥ १३६

कैकेयीरमणो भद्राभर्ता नाग्नजितीधवः ।

माद्रीमनोहरश्शैब्याप्राणबन्धुरुरुक्रमः ॥ १३७
सुशीलादयितो मित्रविन्दानेत्रमहोत्सवः ।
लक्ष्मणावल्लभो रुद्धप्राग्ज्योतिषमहापुरः ॥ १३८
सुरपाशावृतिच्छेदी मुरारिः क्रूरयुद्धवित् ।
हयग्रीवशिरोहर्ता सर्वात्मा सर्वदर्शनः ॥ १३९
नरकासुरविच्छेत्ता नरकात्मजराज्यदः ।
पृथ्वीस्तुतः प्रकाशात्मा हृद्यो यज्ञफलप्रदः ॥ १४०
गुणग्राही गुणद्रष्टा गूढस्वात्मा विभूतिमान् ।

कविर्जगदुपद्रष्टा परमाक्षरविग्रहः ॥ १४१
प्रपन्नपालनो माली महद्ब्रह्मविवर्धनः ।
वाच्यवाचकशक्त्यर्थस्सर्वव्याकृतसिद्धिदः ॥ १४२
स्वयम्प्रभुरनिर्वेद्यस्स्वप्रकाशश्चिरन्तनः ।
नादात्मा मन्त्रकोटीशो नानावादनिरोधकः ॥ १४३
कन्दर्पकोटिलावण्यः परार्थैकप्रयोजकः ।
अमरीकृतदेवौघः कन्यकाबन्धमोचनः ॥ १४४
षोडशस्त्रीसहस्रेशः कान्तः कान्तामनोभवः ।
क्रीडारत्नाचलाहर्ता वरुणच्छत्रशोभितः ॥ १४५

शक्राभिवन्दितश्शक्रजननीकुण्डलप्रदः ।
अदितिप्रस्तुतस्तोत्रो ब्राह्मणोद्घुष्टचेष्टनः ॥ १४६
पुराणस्संयमी जन्मालिप्तः षड्विंशकोऽर्थदः ।
यशस्यनीतिराद्यन्तरहितस्सत्कथाप्रियः ॥ १४७
ब्रह्मबोधः परानन्दः पारिजातापहारकः ।
पौण्ड्रकप्राणहरणः काशिराजनिषूदनः ॥ १४८
कृत्यागर्वप्रशमनो विचक्रवधदीक्षितः ।
हंसविध्वंसनस्साम्बजनको डिम्भकार्दनः ॥ १४९

मुनिर्गोप्ता पितृवरप्रदस्सवनदीक्षितः ।
रथी सारथ्यनिर्देष्टा फाल्गुनः फाल्गुनिप्रियः ॥ १५०
सप्ताब्धिस्तम्भनोज्ञातो हरिस्सप्ताब्धिभेदनः ।
आत्मप्रकाशः पूर्णश्रीरादिनारायणेक्षितः ॥ १५१
विप्रपुत्रप्रदश्चैव सर्वमातृसुतप्रदः ।
पार्थविस्मयकृत्पार्थप्रणवार्थप्रबोधनः ॥ १५२
कैलासयात्रासुमुखो बदर्याश्रमभूषणः ।
घण्टाकर्णक्रियामौढ्यात्तोषितो भक्तवत्सलः ॥ १५३
मुनिवृन्दादिभिर्ध्येयो घण्टाकर्णवरप्रदः ।

तपश्चर्यापरश्चीरवासाः पिङ्गजटाधरः ॥ १५४
प्रत्यक्षीकृतभूतेशश्शिवस्तोता शिवस्तुतः ।
कृष्णास्वयंवरालोककौतुकी सर्वसम्मतः ॥ १५५
बलसंरम्भशमनो बलदर्शितपाण्डवः ।
यतिवेषार्जुनाभीष्टदायी सर्वात्मगोचरः ॥ १५६
सुभद्राफाल्गुनोद्वाहकर्ता प्रीणितफाल्गुनः ।
खाण्डवप्रीणितार्चिष्मान्मयदानवमोचनः ॥ १५७
सुलभो राजसूयार्हं युधिष्ठिरनियोजकः ।

भीमार्दितजरासन्धो भार्गवात्मजराज्यदः ॥ १५८

राजबन्धननिर्मोक्ता राजसूयाग्रपूजनः ।
चैद्याद्यसहनो भीष्मस्तुतस्सात्वतपूर्वजः ॥ १५९

सर्वात्मार्थसमाहर्ता मन्दराचलधारकः ।
यज्ञावतारः प्रह्लादप्रतिज्ञाप्रतिपालकः ॥ १६०

बलियज्ञसभाध्वंसी दृप्तक्षत्रकुलान्तकः ।
दशग्रीवान्तको जेता रेवतीप्रेमवल्लभः ॥ १६१

सर्वावताराधिष्ठाता वेदबाह्यविमोहनः ।
कलिदोषनिराकर्ता दशनामा दृढव्रतः ॥ १६२

अमेयात्मा जगत्स्वामी वाग्मी चैद्यशिरोहरः ।
द्रौपदीरचितस्तोत्रः केशवः पुरुषोत्तमः ॥ १६३
नारायणो मधुपतिर्माधवो दोषवर्जितः ।
गोविन्दः पुण्डरीकाक्षो विष्णुश्च मधुसूदनः ॥ १६४
त्रिविक्रम स्त्रिलोकेशो वामन श्श्रीधरः पुमान् ।
हृषीकेशो वासुदेवः पद्मनाभो महाह्रदः ॥ १६५
दामोदरश्चतुर्व्यूहः पाञ्चालीमानरक्षणः ।
साल्वघ्नस्समरश्लाघी दन्तवक्त्रनिबर्हणः ॥ १६६

दामोदरप्रियसखा पृथुकास्वादनप्रियः ।
घृणी दामोदरश्श्रीदो गोपीपुनरवेक्षकः ॥ १६७
गोपिकामुक्तिदो योगी दुर्वासस्तृप्तिकारकः ।
अविज्ञातव्रजाकीर्णपाण्डवालोकनो जयी ॥ १६८
पार्थसारथ्यनिरतः प्राज्ञः पाण्डवदूत्यकृत् ।
विदुरातिथ्यसन्तुष्टः कुन्तीसन्तोषदायकः ॥ १६९
सुयोधनतिरस्कर्ता दुर्योधनविकारवित् ।
विदुराभिष्टुतो नित्यो वार्ष्णेयो मङ्गलात्मकः ॥ १७०
पञ्चविंशतितत्त्वेशश्चतुर्विंशतिदेहभाक् ।

सर्वानुग्राहकस्सर्वदाशार्हसततार्चितः ॥ १७१
अचिन्त्यो मधुरालापस्साधुदर्शी दुरासदः ।
मनुष्यधर्मानुगतः कौरवेन्द्रक्षयेक्षिता ॥ १७२
उपेन्द्रो दानवारातिरुरुगीतो महाद्युतिः ।
ब्रह्मण्यदेवश्श्रुतिमान्गोब्राह्मणहिताशयः ॥ १७३
वरशीलश्शिवारम्भस्सुविज्ञानविमूर्तिमान् ।
स्वभावशुद्धस्सन्मित्रस्सुशरण्यस्सुलक्षणः ॥ १७४



धृतराष्ट्रगतो दृष्टिप्रदः कर्णविभेदनः ।

प्रतोदधृग्विश्वरूपविस्मारितधनञ्जयः ॥ १७५
सामगानप्रियो धर्मधेनुर्वर्णोत्तमोऽव्ययः ।
चतुर्युगक्रियाकर्ता विश्वरूपप्रदर्शकः ॥ १७६
ब्रह्मबोधपरित्रातपार्थो भीष्मार्थचक्रभृत् ।
अर्जुनायासविध्वंसी कालदंष्ट्राविभूषणः ॥ १७७
सुजातानन्तमहिमा स्वप्नव्यापारितार्जुनः ।
अकालसन्ध्याघटनश्चक्रान्तरितभास्करः ॥ १७८
दुष्टप्रमथनः पार्थप्रतिज्ञापरिपालकः ।
सिन्धुराजशिरः पातस्थानवक्ता विवेकदृक् ॥ १७९

सुभद्राशोकहरणो द्रोणोत्सेकादिविस्मितः ।
पार्थमन्युनिराकर्ता पाण्डवोत्सवदायकः ॥ १८०
अङ्गुष्ठाक्रान्तकौन्तेयरथश्शक्तोऽहिशीर्षजित् ।
कालकोपप्रशमनो भीमसेनजयप्रदः ॥ १८१
अश्वत्थामवधायासत्रातपाण्डुसुतः कृती ।
इषीकास्त्रप्रशमनो द्रौणिरक्षाविचक्षणः ॥ १८२
पार्थापहारितद्रौणिचूडामणिरभंगुरः ।
धृतराष्ट्रपरामृष्ट भीमप्रतिकृतिस्मयः ॥ १८३

भीष्मबुद्धिप्रदश्शान्तश्शरच्चन्द्रनिभाननः ।
गदाग्रजन्मा पाञ्चालीप्रतिज्ञापरिपालकः ॥ १८४
गान्धारीकोपदृग्गुप्तधर्मसूनुरनामयः ।
प्रपन्नार्तिभयच्छेत्ता भीष्मशल्यव्यथावहः ॥ १८५
शान्तश्शान्तनवोदीर्णसर्वधर्मसमाहितः ।
स्मारितब्रह्मविद्यार्थप्रीतपार्थो महास्त्रवित् ॥ १८६
प्रसादपरमोदारो गाङ्गेयसुगतिप्रदः ।
विपक्षपक्षक्षयकृत्परीक्षित्प्राणरक्षणः ॥ १८७
जगद्गुरुर्धर्मसूनोर्वाजिमेधप्रवर्तकः ।

विहितार्थप्रसत्कारो मासकात्परिवर्तदः ॥ १८८
उत्तङ्कहर्षदात्मीयदिव्यरूपप्रदर्शकः ।
जनकावगतस्वोक्तभारतस्सर्वभावनः ॥ १८९
असोढयादवोद्रेको विहितासादिपूजनः ।
समुद्रस्थापिताश्चर्यमुसलो वृष्णिवाहकः ॥ १९०
मुनिशापायुधः पद्मासनादित्रिदशार्थितः ।
वृष्टिप्रत्यवहारोत्कस्स्वधामगमनोत्सुकः ॥ १९१
प्रभासालोकनोद्युक्तो नानाविधनिमित्तकृत् ।

सर्वयादवसंसेव्यस्सर्वोत्कृष्टपरिच्छदः ॥ १९२
वेलाकाननसञ्चारी वेलानिलहृतश्रमः ।
कालात्मा यादवोऽनन्तस्स्तुतिसन्तुष्टमानसः ॥ १९३
द्विजालोकनसन्तुष्टः पुण्यतीर्थमहोत्सवः ।
सत्काराह्लादिताशेषभूसुरस्सुरवल्लभः ॥ १९४
पुण्यतीर्थाप्लुतः पुण्यः पुण्यदस्तीर्थपावनः ।
विप्रसात्कृतगोकोटिश्शतकोटिसुवर्णदः ॥ १९५
स्वमायामोहिताऽशेषवृष्णिवीरो विशेषवित् ।
जलजायुधनिर्देष्टा स्वात्मावेशितयादवः ॥ १९६

देवताभीष्टवरदः कृतकृत्यः प्रसन्नधीः ।
स्थिरशेषायुतबलस्सहस्रफणिवीक्षणः ॥ १९७
ब्रह्मवृक्षवरच्छायासीनः पद्मासनस्थितः ।
प्रत्यगात्मा स्वभावार्थः प्रणिधानपरायणः ॥ १९८
व्याधेषुविद्धपूज्याङ्घ्रिर्निषादभयमोचनः ।
पुलिन्दस्तुतिसन्तुष्टः पुलिन्दसुगतिप्रदः ॥ १९९
दारुकार्पितपार्थादिकरणीयोक्तिशासिता ।
दिव्यदुन्दुभिसंयुक्तः पुष्पवृष्टिप्रपूजितः ॥ २००

पुराणः परमेशानः पूर्णभूमा परिष्टुतः ।
पतिराद्यः परं ब्रह्म परमात्मा परात्परः ॥ २०१
श्रीपरमात्मा परात्परः ओं नमइति—

इदं सहस्रं कृष्णस्य नाम्नां सर्वार्थदायकम् ।
अनन्तरूपी भगवान् व्याख्यातादौ स्वयम्भुवे ॥ २०२
तेन प्रोक्तं वसिष्ठाय ततो लब्ध्वा पराशरः ।
व्यासाय तेन सम्प्रोक्तं शुको व्यासादवाप्तवान् ॥ २०३
तच्छिष्यैर्बहुभिर्भूमौ ख्यापितं द्वापरे युगे ।
कृष्णाज्ञया हरिहरः कलौ प्रख्यापयद्विभुः ॥ २०४

इदं पठति भक्त्या यश्शृणोति च समाहितः ।
स्वसिद्ध्यै प्रार्थयंत्येनं तीर्थक्षेत्रादिदेवताः ॥ २०५
प्रायश्चित्तान्यशेषाणि नालं यानि व्यपोहितुम् ।
तानि पापानि नश्यन्ति सकृदस्य प्रशंसनात् ॥ २०६
ऋणत्रयविमुक्तस्य श्रौतस्मार्तानुवर्तिनः ।
ऋषेस्त्रिमूर्तिरूपस्य फलं विन्देदिदं पठन् ॥ २०७
इदं नामसहस्रं यः पठत्येतच्छृणोति च ।

शिवलिङ्गसहस्रस्य स प्रतिष्ठाफलं लभेत् ॥ २०८

इदं किरीटी संजप्य जयी पांशुपतास्त्रभाक् ।
कृष्णस्य प्राणभूतस्सन् कृष्णं सारथिमाप्तवान् ॥ २०९

द्रौपद्या दमयन्त्या च सावित्र्या च सुशीलया ।
दुरितानि जितान्येतज्जपादाप्तं च वाञ्छितम् ॥ २१०

किमिदं बहुना शंसन्मानवो मोदनिर्भरः ।
ब्रह्मानन्दमवाप्यान्ते कृष्णसायुज्यमाप्नुयात् ॥ २११

॥ इति श्रीविष्णुधर्मोत्तरे श्रीकृष्णसहस्रनामस्तोत्रं सम्पूर्णम् ॥



॥ श्रीः ॥

## ॥ श्रीकृष्णसहस्रनामावलिः ॥



ओं श्रीकृष्णाय नमः
श्रीवल्लभाय
शार्ङ्गिणे
विष्वक्सेनाय
स्वसिद्धिदाय

ओं क्षीरोदधाम्ने नमः
व्यूहेशाय
शेषशायिने
जगन्मयाय
भक्तिगम्याय १०

त्रयीमूर्तये

भारतवसुधास्तुताय

देवदेवाय

दयासिंधवे

देवाय

देवशिखामणये

सुखभावाय

सुखाधाराय

मुकुन्दाय

मुदिताशयाय नमः २०

अविक्रियाय

क्रियामूर्तये

अध्यात्मस्वस्वरूपवते

शिष्टाभिलक्ष्याय

भूतात्मने

धर्मत्राणार्थचेष्टिताय

अन्तर्यामिणे

कालरूपाय

ओं कालावयवसाक्षिणे नमः
वसुधायासहरणाय ३०
नारदप्रेरणोन्मुखाय
प्रभविष्णवे
नारदोद्गीताय
लोकरक्षापरायणाय
रौहिणेयकृतानन्दाय
योगज्ञाननियोजकाय

ओं महागुहान्ताय नमः
निक्षिप्ताय
पुराणवपुषे
आत्मवते ४०
शूरवंशैकधिये
शौरये
कंसशङ्काविषादकृते
वसुदेवोल्लसच्छक्तये

देवक्यष्टमगर्भगाय

वसुदेवस्तुताय

श्रीमते

देवकीनन्दनाय

हरये

आश्चर्यबालाय

श्रीवत्सलक्ष्मवक्षसे

चतुर्भुजाय

स्वभावोत्कृष्टसद्भावाय

कृष्णाष्टम्यन्तसम्भवाय

प्राजापत्य-

ऋक्षसम्भूताय

निशीथसमयोदिताय

शङ्खचक्रगदापद्मपाणये

५० पद्मनिभेक्षणाय

किरीटकौस्तुभोरस्काय

स्फुरन्मकरकुण्डलाय ६०

पीतवाससे

ओं घनश्यामाय नमः

कुञ्चिताञ्चितकुन्तलाय

सुव्यक्तव्यक्ताभरणाय

सूतिकागृहभूषणाय

कारागारान्धकारघ्नाय

पितृप्राग्जन्मसूचकाय

वसुदेवस्तुतिप्रीताय

तापत्रयनिवारणाय

ओं निरवद्याय नमः ७०

क्रियामूर्तये

न्यायवाक्यनियोजकाय

अदृष्टचेष्टाय

कूटस्थाय

धृतलौकिकविग्रहाय

महर्षिमानसोल्लासाय

महामङ्गळ्यदायकाय

सन्तोषितसुरव्राताय
साधुचित्तप्रसादकाय
जनकोपायनिर्देष्ट्रे ८०
देवकीनयनोत्सवाय
पितृपाणिपरिष्काराय
मोहितागाररक्षकाय
[redacted]ज्युद्घाटिताशेषकवाटाय
पितृवाहकाय
शेषोरगफणाच्छत्राय

शेषोक्ताख्यासहस्रकाय
यमुनापूरविध्वंसिने
स्वभासोद्भासितव्रजाय
कृतात्मविद्याविन्यासाय ९०
योगमायाग्रसम्भवाय
दुर्गानिवेदितोद्भवाय
यशोदातल्पशायकाय
नन्दगोपोत्सवस्फूर्तये
व्रजानन्दकरोदयाय

ओं सुजातजातकर्मश्रिये नमः
गोपीभद्रोक्तिनिर्वृताय
अलीकनिद्रोपगमाय
पूतनास्तनपीडनाय
स्तन्यात्तपूतनाप्राणाय १००
पूतनाक्रोशकारकाय
विन्यस्तरक्षागोधूळये
यशोदाकरलालिताय

ओं नन्दाघ्रातशिरोमध्याय नमः
पूतनासुगतिप्रदाय
बालाय
पर्यङ्कनिद्राळवे
मुखार्पितपदाङ्गुळये
अञ्जनस्निग्धनयनाय
पर्यायाङ्कुरितस्मिताय ११०
लीलाक्षाय

तरळालोकाय
शकटासुरभंजनाय
द्विजोदितस्वस्त्ययनाय
मंत्रपूतजलाप्लुताय
यशोदोत्संगपर्यंकाय
यशोदामुखवीक्षकाय
यशोदास्तन्यमुदिताय
तृणावर्तादिदुस्सहाय
तृणावर्तासुरध्वंसिने १२०

मातृविस्मयकारकाय
प्रशस्तनामकरणाय
जानुचंक्रमणोत्सुकाय
व्यालंबिचूलिकारत्नाय
घोषगोपाय
प्रहर्षणाय
स्वमुखप्रतिबिंबार्थिने
ग्रीवाव्याघ्रनखोज्ज्वलाय
पंकानुलेपरुचिराय

ओं मांसलोरुकटीतटाय नमः
घृष्टजानुकरद्वंद्वाय
प्रतिबिंबानुकारकृते
अव्यक्तवर्ण-
वाग्वृत्तये
स्मितलक्ष्यरदोद्गमाय
धात्रीकरसमालंबिने
प्रस्खलच्चित्रचंक्रमणाय

ओं अनुरूपवयस्याढ्याय नमः
चारुकौमारचापलाय
वत्सपुच्छसमाकृष्टाय
वत्सपुच्छाविकर्षणाय १४०
१ विस्मारितान्यव्यापाराय
गोपगोपीमुदावहाय
अकालवत्सनिर्मोक्त्रे
अजन्याक्रोशसुस्मिताय

नवनीतमहाचौराय
दारकाहारदायकाय
पीठोलूखलसोपानाय
क्षीरभांडविभेदनाय
शिक्यभाण्डसमाकर्षिणे
ध्वांतागारप्रवेशकृते १५०
भूषारत्नप्रकाशाढ्याय
गोप्युपालंभभर्त्सिताय
परागधूसराकाराय
मृद्भक्षणकृतेक्षणाय
बालोक्तमृत्कथारंभाय
मित्रांतर्गूढविग्रहाय
कृतसन्त्रासलोलाक्षाय
जननीप्रत्ययावहाय
मातृदृश्यात्तवदनाय
वक्त्रलक्ष्यचराचराय १६०
यशोदालालितस्वात्मने
स्वयंस्वाच्छंद्यमोहनाय

ओं सवित्रीस्नेहसंश्लिष्टाय नमः
सवित्रीस्तनलोलुपाय
नवनीतार्थनाप्रह्वाय
नवनीतमहाशनाय
मृषाकोपप्रकंपोष्ठाय
गोष्ठांगणविलोकनाय
दधिमंथघटीभेत्त्रे
किंकिणीक्वाणसूचिताय १७९

ओं हैयंगवीनरसिकाय नमः
मृषाश्रवे
चौर्यशङ्किताय
जननीश्रमविज्ञात्रे
दामबंधनियंत्रिताय
दामाकल्पाय
चलापांगाय
गाढोलूखलबंधनाय

आकृष्टोलूखलाय
अनन्ताय १८०
कुबेरसुतशापविदे
नारदोक्तिपरामर्शिने
यमलार्जुनभञ्जनाय
धनदात्मजसङ्घुष्टाय
नन्दमोचितबन्धनाय
बालकोद्गीतनिरताय
बाहुक्षेपोदितप्रियाय

आत्मज्ञाय
मित्रवशगाय
गोपीगीतगुणोदयाय १९०
प्रस्थानशकटारूढाय
बृन्दावनकृतालयाय
गोवत्सपालनैकाग्राय
नानाक्रीडापरिच्छदाय
क्षेपणीयाय
क्षेपणप्रीताय

ओं वेणुवाद्यविशारदाय ननः
वृषवत्सानुकरणाय
वृषध्वानविडम्बनाय
नियुद्धलीलासंहृष्टाय २००
कूजानुकृतकोकिलाय
उपात्तहंसगमनाय
सर्वजन्तुरुतानुकृते
भृङ्गानुकारिणे

ओं दध्यन्नचोराय नमः
वत्सपुरस्सराय
बलिने
बकासुरग्राहिणे
बकतालुप्रदाहकाय
भीतगोपार्भकाहूताय २१०
बकचञ्चुविदारणाय
बकासुरारये

गोपालाय

बालाय

बालाह्नुवावहाय

बलभद्रसमाश्लिष्टाय

कृतक्रीडानिलयनाय

क्रीडासेतुविधानज्ञाय

प्लवङ्गमाय

प्लवनाय

अद्भुताय

कन्दुकक्रीडनाय

लुप्तनन्दादिभववेदनाय

सुमनोऽलङ्कृतशिरसे

स्वादुस्निग्धान्नशिक्यभृते

गुञ्जाप्रालम्बनच्छन्नाय

पिञ्छैरलकवेषकृते

वन्याशनप्रियाय

ओं शृङ्गरवाकारितवत्सकाय नमः
मनोज्ञपल्लवोत्तंसपुष्पस्वेच्छात्त-
षट्पदाय २३०
मञ्जुशिंजितमञ्जीरचरणाय
करकङ्कणाय
अन्योन्यशासनाय
क्रीडापटवे
परमकैतवाय

ओं प्रतिध्वानप्रमुदिताय नमः
शाखाचतुरचंक्रमाय
अघदानवसंहर्त्रे
व्रजविघ्नविनाशनाय
श्रेयोनिधये २४०
दानवमुक्तिदाय
कालिन्दीपुलिनासीनाय
सहभुक्तव्रजार्भकाय

कक्षाजठरविन्यस्तवेणवे
वल्लवचेष्टिताय
भुजसंध्यन्तरन्यस्तशृङ्गवेत्राय
शुचिस्मिताय
वामपाणिस्थदध्यन्नकबळाय
कलभाषणाय
अङ्गुल्यन्तरविन्यस्तफलाय
परमपावनाय
अदृश्यतर्णकान्वेषिणे

वल्लवार्भकभीतिघ्ने
अदृष्टवत्सपव्राताय
ब्रह्मविज्ञातवैभवाय
गोवत्सवत्सपान्वेषिणे
विराट्पुरुषविग्रहाय
स्वसङ्कल्पानुरूपाय
अर्थाय
वत्साय
वत्सपरूपधृते

२६० 

| | |
|---|---|
| ओं यथावत्सक्रियारूपाय नमः | ओं दान्ताय नमः २७० |
| यथास्थाननिवेशनाय | ब्रह्मविज्ञातवैभवाय |
| यथाव्रजार्भकाकाराय | विचित्रशक्तये |
| गोगोपीस्तन्यपाय | व्यालीनाय |
| सुखिने | सृष्टगोवत्सवत्सपाय |
| चिराय | ब्रह्मत्रपाकराय |
| बलाय | धातृस्तुताय |
| हिताय | सर्वार्थसाधकाय |

ब्रह्मणे
ब्रह्ममयाय
अव्यक्ताय २८०
तेजोरूपाय
सुखात्मकाय
निरुक्ताय
व्याकृतये
निरालंबनभावनाय
प्रभविष्णवे

अतंद्रीकाय
देवपक्षार्थरूपधृते
अकामाय
सर्ववेद्याद्ये २९०
अणीयसे
स्थूलरूपवते
व्यापिने
व्याप्याय
कृपाकर्त्रे

ओं विचित्राचारसम्मताय नमः
छंदोमयाय
प्रधानात्मने
मूर्ताय
मूर्तद्व्याकृतये ३००
अनेकमूर्तये
अक्रोधाय
परस्मै

ओं प्रकृतये नमः
अक्रमाय
सकलावरणोपेताय
सर्वदेवाय
महेश्वराय
महाप्रभावनाय
पूर्ववत्साय ३१०
वत्सपदर्शकाय

| | | |
|---|---|---|
| कृष्णाय | | लीलावैचित्र्यकोविदाय |
| यादवाय | | बलभद्रैकहृदयाय |
| गोपालाय | | नामाकारितगोकुलाय |
| गोपालोकनहर्षिताय | | गोपालबालकाय |
| स्मितेक्षाहर्षिताय | | भव्याय |
| ब्रह्मणे | | रज्जुयज्ञोपवीतवते |
| भक्तवत्सलाय | | वृक्षच्छायाहताशान्ताय |
| वाक्प्रियाय | | गोपोत्सङ्गोपबर्हिणे |
| ब्रह्मानन्दाश्रुधौतांघ्रये | ३२० | गोपसंवाहितपदाय |

ओं गोपव्यजनवीजिताय नमः
गोपगानसुखोन्निद्राय
श्रीदामार्जितसौहृदाय
सुनन्दसुहृदे
एकात्मने
सुबलप्राणरञ्जनाय
तालीवनकृतक्रीडाय
बलपातितधेनुकाय

ओं गोपीसौभाग्यसम्भाव्याय नमः
गोधूलिच्छुरितालकाय
गोपीविरहसन्तप्ताय ३४०
गोपिकाकृतमज्जनाय
प्रलम्बबाहवे
उत्फुल्लपुण्डरीकावतंसकाय
विलासललितस्मेरगर्भलीलाव-
लोकनाय

स्रग्भूषणानुलेपाढ्याय
जनन्युपहृतान्नभुजे
वरशय्याशयाय
राधाप्रेमसल्लापनिर्वृताय
यमुनातटसञ्चारिणे
विषार्तव्रजहर्षदाय ३५०
काळीयक्रोधजनकाय
वृद्धाहिकुलवेष्टिताय
काळीयाहिफणारङ्गनटनाय
काळीयमर्दनाय
नागपत्नीस्तुताय
प्रीताय
स्वदृगात्मने
स्तुतिप्रियाय
नानावेषसमृद्धिकृते
अविष्वक्तदृशे ३६०
आत्मेशाय
सर्वेश्वराय

ओं प्रसिद्धाय नमः
सर्वसात्वताय
अकुण्ठधाम्ने
चन्द्रार्कदृष्टये
आकाशनिर्मलाय
अनिर्देश्यगतये
तारावनितापतिभैक्षदाय
स्वांघ्रिमुद्राङ्कनागेन्द्रमूर्ध्ने ३७०

ओं कालीयसंस्तुताय नमः
अभयाय
विश्वतश्चक्षुषे
स्तुतोत्तमगुणाय
प्रभवे
आत्मने
मरुत्प्राणाय
परमात्मने

द्युशीर्षवते
नागोपायनहृष्टात्मने
ह्रदोत्सारितकाळीयाय
बलभद्रसुखालापाय
गोपालिङ्गननिर्वृताय
दावाग्निभीतगोपालगोप्त्रे
दावाग्निनाशनाय
नयनाच्छादनक्रीडालम्पटाय
नृपवेष्टिताय

काकपक्षधराय ३९०
सौम्याय
बलवाहकाय
केळिमते
बलपातितदुर्धर्षाय
प्रलम्बाय
बलवत्सलाय
मुञ्जाटव्यग्निशमनाय
प्रावृट्कालविनोदवते

ओं शिलान्यस्तान्नभृते नमः
दैत्यसंहर्त्रे ४००
शाद्वलासनाय
सदासगोपिकोद्गीताय
कर्णिकारावतंसिकाय
नटवेषधराय
पद्ममालाङ्काय
गोपिकावृताय

ओं गोपीमनोहरापाङ्गाय नमः
वेणुवादनतत्पराय
विन्यस्तवदनाम्भोजाय
चारुशब्दकृताननाय ४१०
बिम्बाधरार्पितदारुवेणवे
विश्वविमोहनाय
व्रजसंवर्णिताय
श्राव्यवेणुनादश्रुतिप्रियाय

गोगोपगोपीजनेप्सिताय
ब्रह्मेन्द्राद्यभिवन्दिताय
गीतस्तुतिसरित्पूराय
नादनर्तितबर्हिणे
रागपल्लवितस्थाणवे
गीतानमितपादपाय ४२०
विस्मारिततृणग्रासमृगाय
मृगविलोभिताय
व्याघ्रादिसिंहसहजवैरहर्त्रे
सुगायनाय
गाढोदीरितगोवृन्दाय
प्रेमोत्कर्णिततर्णकाय
निष्पन्दयानब्रह्मादिवीक्षिताय
विश्ववन्दिताय
शाखोत्कर्णशकुन्तौघाय
छत्रायितवलाहकाय ४३०
प्रसन्नाय
परमानन्दाय

ओं चित्रायितचराचराय नमः
गोपिकामदनाय
गोपीकुचकुङ्कुममुद्रिताय
गोपकन्याजलक्रीडाहृष्टाय
गोप्यंशुकापहर्त्रे
स्कन्धारोपितगोपस्त्रीवाससे
कुन्दनिभस्मिताय
गोपीनेत्रोत्पलशशिने ४४०

ओं गोपिकायाचितांशुकाय नमः
गोपीनमस्क्रियादेष्ट्रे
गोप्येककरवन्दिताय
गोप्यञ्जलिविशेषार्थिने
गोपीक्रीडाविलोभिताय
शान्तवासस्फुरद्गोपीकृताञ्जलये
अघापहाय
गोपीकेळिविलासार्थिने

| | | |
|---|---|---|
| गोपीसम्पूर्णकामदाय | | यज्ञपत्न्यभिवाञ्छिताय |
| गोपत्नीवस्त्रदाय | ४५० | मुनिपत्नीवितीर्णान्नतृप्ताय |
| गोपीचित्तचोराय | | मुनिवधूप्रियाय ४६० |
| कुतूहलिने | | द्विजपत्न्यभिभावज्ञाय |
| वृन्दावनप्रियाय | | द्विजपत्नीवरप्रदाय |
| गोपबन्धवे | | प्रतिरुद्धसतीमोक्षप्रदाय |
| यज्वान्नयाचित्रे | | द्विजविमोहिताय |
| यज्ञेशाय | | मुनिज्ञानप्रदाय |
| यज्ञभावज्ञाय | | यज्वस्तुताय |

ओं वासवयागविदे नमः

पितृप्रोक्तक्रियारूपशक्रयागनि-
वारणाय

शक्रामर्षकराय

शक्रवृष्टिप्रशमनोन्मुखाय ४७०

गोवर्धनधराय

गोपगोवृन्दत्राणतत्पराय [र्गलाय

गोवर्धनगिरिच्छत्रचण्डदण्डभुजा-

ओं सप्ताहविधृताद्रीन्द्राय नमः

मेघवाहनगर्वघ्ने

भुजाग्रोपरिविन्यस्तक्ष्माधर-
क्ष्माभृते

अच्युताय

स्वस्थानस्थापितगिरये

गोपीदृक्ष्यक्षतार्चिताय

सुमनसे ४८०

सुमनोवृष्टिहृष्टाय
वासववन्दिताय
कामधेनुपयःपूराभिषिक्ताय
सुरभिस्तुताय
धराङ्घ्रये
ओषधीरोम्णे
धर्मगोप्त्रे
मनोमयाय
ज्ञानयज्ञप्रियाय

शास्त्रनेत्राय ४९०
सर्वार्थसारथये
ऐरावतकरानीतवियद्गङ्गा-
प्लुताय
विभवे
ब्रह्माभिषिक्ताय
गोगोप्त्रे
सर्वलोकशुभङ्कराय
सर्ववेदमयाय

ओं मग्ननन्दान्वेषिणे नमः
पितृप्रियाय
वरुणोदीरितात्मेक्षाकौतुकाय
वरुणार्चिताय
वरुणानीतजनकाय
गोपज्ञातात्मवैभवाय
स्वर्लोकालोकसंहृष्टगोपवर्गत्रि-
वर्गदाय

ओं ब्रह्महृद्गोपिताय नमः
गोपद्रष्ट्रे
ब्रह्मपदप्रदाय
शरच्चन्द्रविहारोत्काय
श्रीपतये
वशकाय ५१०
क्षमाय
भयापहाय

भर्तृरुद्धगोपिकाध्यानगोचराय
गोपिकानयनास्वाद्याय
गोपीनर्मोक्तिनिर्वृताय
गोपिकामानहरणाय
गोपिकाशतयूथपाय
वैजयन्तीस्रगाकल्पाय
गोपिकामानवर्धनाय
गोपकान्तासुनिर्देष्ट्रे ५२०
कान्ताय

मन्मथमन्मथाय
स्वात्मास्यदत्तताम्बूलाय
फलितोत्कृष्टयौवनाय
वल्लवीस्तनसक्ताक्षाय
वल्लवीप्रेमचालिताय
गोपीचेलांचलासीनाय
गोपीनेत्राब्जषट्पदाय
रासक्रीडासमासक्ताय
गोपीमण्डलमण्डनाय ५३०

ओं गोपीहेममणिश्रेणिमध्येन्द्रमणये
उज्ज्वलाय
विद्याधरेन्दुशापघ्नाय
शङ्खचूडशिरोहराय
शङ्खचूडशिरोरत्नसम्प्रीणितब- [लाय
अनघाय
अरिष्टारिष्टकृद्दुष्टकेशिदैत्यनिषू-
दनाय

ओं सरसाय नमः
सस्मितमुखाय
सुस्थिराय ५४०
विरहाकुलाय
सङ्कर्षणार्पितप्रीतये
अक्रूरध्यानगोचराय
अक्रूरसंस्तुताय
गूढाय

गुणवृत्त्युपलक्षिताय

प्रमाणगम्याय

तन्मात्राय

अवयविने

बुद्धितत्पराय ५५०

सर्वप्रमाणप्रमथिने

सर्वप्रत्ययसाधकाय

पुरुषाय

प्रधानात्मने

विपर्यासविलोचनाय

मधुराजनसंवीक्ष्याय

रजकप्रतिघातुकाय

विचित्राम्बरसंवीताय

मालाकारवरप्रदाय

कुब्जावक्रत्वनिर्मोक्त्रे ५६०

कुब्जायौवनदायकाय

कुब्जाङ्गरागसुरभये

कंसकोदण्डखण्डनाय

ओं धीराय नमः
कुवलयापीडमर्दनाय
कंसभीतिकृते
दन्तिदन्तायुधाय
रङ्गत्रासकाय
मल्लयुद्धविदे
चाणूरहन्त्रे ५७०
कंसारये

ओं देवकीहर्षदायकाय नमः
वसुदेवपदानम्राय
पितृबन्धविमोचनाय
उर्वीभयापहाय
भूपाय
उग्रसेनाधिपत्यदाय
आज्ञास्थितशचीनाथाय
सुधर्मानयनक्षमाय

आद्याय ५८०

द्विजातिसत्कर्त्रे

शिष्टाचारप्रदर्शकाय

सान्दीपनिकृताभ्यस्तविद्याभ्या-
सैकधिये

सुधिये

गुर्वभीष्टक्रियादक्षाय

पश्चिमोदधिपूजिताय

हतपञ्चजनप्राप्तपाञ्चजन्याय

यमार्चिताय

धर्मराजजयानीतगुरुपुत्राय

उरुक्रमाय ५९०

गुरुपुत्रप्रदाय

शास्त्रे

मथुराजनमानदाय

जामदग्न्यसमभ्यर्च्याय

गोमन्तगिरिसञ्चाराय

गोमन्तदावशमनाय

ओं गरुडानीतभूषणाय नमः
चक्राद्यायुधसंशोभिताय
जरासन्धमदापहाय
सृगालावनिपालघ्नाय ६००
सृगालात्मजराज्यदाय
विध्वस्तकालयवनाय
मुचुकुन्दवरप्रदाय
आज्ञापितमहाम्भोधये

ओं द्वारकापुरकल्पनाय नमः
द्वारका.निलयाय
रुक्मिमानहन्त्रे
यदूद्वहाय
रुचिराय
रुक्मिणीजानये ६१०
प्रद्युम्नजनकप्रभवे
अपाकृतत्रिलोकार्तये

अनिरुद्धपितामहाय
अनिरुद्धपदान्वेषिणे
चक्रिणे
गरुडवाहनाय
बाणासुरपुरीरोद्ध्रे
रक्षाज्वलनयन्त्रजिते
धूतप्रमथसंरम्भाय
जितमाहेश्वरज्वराय ६२०
षट्चक्रशक्तिनिर्जेत्रे
भूतभेतालमोहकृते
शम्भुत्रिशूलजिते
शम्भुजृम्भणाय
शम्भुसंस्तुताय
इन्द्रियाय
आत्मने
इन्दुहृदयाय
सर्वयोगेश्वरेश्वराय
आत्मज्ञाननिधये ६३०

ओं मेधाकोशाय नमः
तन्मात्ररूपवते
इन्द्राय
अग्निवदनाय
कालनाभाय
सर्वागमाय
अध्वगाय
तुरीयाय

ओं सर्वधीसाक्षिणे नमः
द्वन्द्वारामाय ६४०
आत्मदूराय
आत्मदूरगाय
अज्ञातपारवश्यश्रियै
अव्याकृतविहारवते
आत्मप्रदीपाय
विज्ञानमात्रात्मने

श्रीनिकेतनाय
बाणबाहुवनच्छेत्रे
महेन्द्रप्रीतिवर्धनाय
अनिरुद्धनिरोधज्ञाय ६५०
जलेशाहृतगोकुलाय
जलेशविजयिने
वीराय
सत्राजिद्रत्नयाचकाय
प्रसेनान्वेषणोद्युक्ताय

जाम्बवद्धृतरत्नदाय
जितर्क्षराजतनयाहर्त्रे
जाम्बवतीप्रियाय
सत्यभामाप्रियाय
कामाय ६६०
शतधन्वशिरोहराय
कालिन्दीपतये
अक्रूरबन्धवे
अक्रूररत्नदाय

ओं कैकेयीरमणाय नमः
भद्राभर्त्रे
नाग्नजितीधवाय
माद्रीमनोहराय
शैब्यप्राणबन्धवे
उरुक्रमाय ६७०
सुशीलादयिताय
मित्रविन्दानेत्रमहोत्सवाय

ओं लक्ष्मणावल्लभाय नमः
रुद्धप्राग्ज्योतिषमहापुराय
सुरपाशावृतिच्छेदिने
मुरारये
क्रूरयुद्धविदे
हयग्रीवशिरोहर्त्रे
सर्वात्मने
सर्वदर्शनाय ६८०

नरकासुरविच्छेत्त्रे
नरकात्मजराज्यदाय
पृथ्वीस्तुताय
प्रकाशात्मने
हृद्याय
यज्ञफलप्रदाय
गुणग्राहिणे
गुणद्रष्ट्रे
गूढस्वात्मानुभूतिमते

कवये ६१०
जगदु[illegible]द्रष्ट्रे
परमाक्षरविग्रहाय
प्रपन्नाय
पालनाय
मालिने
महद्ब्रह्मविवर्धनाय
वाच्यवाचकशक्त्यर्थाय
सर्वव्याकृतसिद्धिदाय

ओं स्वयंप्रभवे नमः

अनिर्वेद्याय ७००

स्वप्रकाशाय

चिरन्तनाय

नादात्मने

मन्त्रकोटीशाय

नानावादनिरोधकाय

कन्दर्पकोटिलावण्याय

ओं परार्थैकप्रयोजकाय नमः

अमरीकृतदेवौघाय

कन्यकाबन्धमोचनाय

षोडशस्त्रीसहस्रेशाय ७१०

कान्ताय

कान्तामनोभवाय

क्रीडारत्नाचलाहर्त्रे

वरुणच्छत्रशोभिताय

शक्राभिवन्दिताय
शक्रजननीकुण्डलप्रदाय
अदितिप्रस्तुतस्तोत्राय
ब्राह्मणोद्घुष्टचेष्टनाय
पुराणाय
संयमिने ७२०
जन्मालिप्ताय
षड्विंशकाय
अर्थदाय

यशसे
अनन्ताय
आद्यन्तरहिताय
सत्कथाप्रियाय
ब्रह्मबोधाय
परानन्दाय
पारिजातापहारकाय ७३०
पौण्ड्रकप्राणहरणाय
काशीराजनिषूदनाय

ओं कृत्यागर्वप्रशमनाय नमः
विचक्राय
वधदीक्षिताय
हंसविध्वंसनाय
साम्बजनकाय
डिम्भकाय
अर्दनाय
मुनये ७४०

ओं गोप्त्रे नमः
पितृवरप्रदाय
सवनदीक्षिताय
रथिने
सारथ्यनिर्देष्ट्रे
फल्गुनाय
फाल्गुनिप्रियाय
सप्ताब्धिस्तम्भनोद्भूताय

हरये
सप्ताब्धिभेदनाय ७५०
आत्मप्रकाशाय
पूर्णश्रिये
आदिनारायणेक्षिताय
विप्रपुत्रप्रदाय
सर्वमातृसुतप्रदाय
पार्थविस्मयकृते
पार्थप्रणवार्थप्रबोधनाय
कैलासयात्रासुमुखाय
बदर्याश्रमभूषणाय
घण्टाकर्णक्रियामौढ्यतोषिताय
भक्तवत्सलाय
मुनिबृन्दादिभिर्ध्येयाय
घण्टाकर्णवरप्रदाय
तपश्चर्यापराय
चीरवाससे
प्रत्यक्षीकृतभूतेशाय

ॐ शिवस्तोत्रे नमः
शिवस्तुताय
कृष्णास्वयंवरालोककौतुकिने
सर्वसम्मताय ७७०
बलसंरंभशमनाय
बलदर्शितपाण्डवाय
यतिवेषार्जुनाभीष्टदायिने
सर्वात्मगोचराय

ॐ सुभद्राफाल्गुनोद्वाहकर्त्रे
प्रीणितफाल्गुनाय
खाण्डवप्रीणितार्चिष्मते
मयदानवमोचनाय
सुलभाय
राजसूयार्हाय ७८०
युधिष्ठिरनियोजकाय
भीमार्दितजरासन्धाय

मागधात्मजराज्यदाय
राजबन्धननिर्मोक्त्रे
राजसूयाग्रपूजनाय
चैद्याद्यसहनाय
भीष्मस्तुताय
साक्षतपूर्वजाय
सर्वात्मने
अर्थसमाहर्त्रे ७९०
मन्दराचलधारकाय

यज्ञावताराय
प्रह्लादप्रतिज्ञापरिपालकाय
बलियज्ञसभाध्वंसिने
दृप्तक्षत्रकुलान्तकाय
दशग्रीवान्तकाय
जेत्रे
रेवतीप्रेमवल्लभाय
सर्वावताराधिष्ठात्रे
वेदबाह्यविमोहनाय ८००

ओं कलिदोषनिराकर्त्रे नमः
दशनाम्ने
दृढव्रताय
अमेयात्मने
जगत्स्वामिने
वाग्मिने
चैद्यशिरोहराय
द्रौपदीरचितस्तोत्राय

ओं केशवाय नमः
पुरुषोत्तमाय ८१०
नारायणाय
मधुपतये
माधवाय
दोषवर्जिताय
गोविन्दाय
पुण्डरीकाक्षाय

विष्णवे
मधुसूदनाय
त्रिविक्रमाय
त्रिलोकेशाय ८२०
वामनाय
श्रीधराय
पुंसे
हृषीकेशाय
वासुदेवाय

पद्मनाभाय
महाप्रदाय
दामोदराय
चतुर्व्यूहाय
पाञ्चालीमानरक्षणाय ८३०
साल्वघ्नाय
समरश्लाघिने
दन्तवक्त्रनिबर्हणाय
दामोदरप्रियसखाय

ओं पृथुकास्वादनप्रियाय नमः
घृणिने
दामोदराय
श्रीदाय
गोपीपुनरवेक्षकाय
गोपिकामुक्तिदाय ८४०
योगिने
दुर्वासस्तृप्तिकारकाय

ओं अविज्ञातव्रजाकीर्णपाण्डवालोकनाय
जयिने
पार्थसारथ्यनिरताय
प्राज्ञाय
पाण्डवदूतकृते
विदुरातिथ्यसन्तुष्टाय
कुन्तीसन्तोषदायकाय

सुयोधनतिरस्कर्त्रे ८५० सर्वदाशार्हसततार्चिताय
दुर्योधनविकारविदे अन्याय ८६०
विदुराभिष्टुताय मधुरालापाय
नित्याय साधुदर्शिने
वार्ष्णेयाय दुरासदाय
मङ्गलात्मकाय मनुष्यधर्मानुगताय
पञ्चविंशतितत्त्वेशाय कौरवेन्द्रक्षयेक्षिताय
चतुर्विंशतिदेहभाजे उपेन्द्राय
सर्वानुग्राहकाय दानवारातये

ओं उरुगीताय नमः
महाद्युतये
ब्रह्मण्यदेवाय ८७०
श्रुतिमते
गोब्राह्मणहिताशयाय
वरशीलाय
शिवा[illegible]
सुविज्ञानविमूर्तिमते

ओं स्वभावशुद्धाय नमः
सन्मित्राय
सुशरण्याय
सुलक्षणाय
धृतराष्ट्रगतौदृष्टिप्रदाय ८८०
कर्णविभेदनाय
प्रतोदभृते
विश्वरूपविस्मारितधनञ्जयाय

सामगानप्रियाय

धर्मधेनवे

वर्णोत्तमाय

अव्ययाय

चतुर्युगक्रियाकर्त्रे

विश्वरूपप्रदर्शकाय

ब्रह्मबोधपरित्रातपार्थाय ८९०

भीष्मार्थचक्रभृते

अर्जुनायासविध्वंसिने

कालदंष्ट्राविभूषणाय

सुजातानन्तमहिम्ने

स्वप्नव्यापारितार्जुनाय

अकालसन्ध्याघटनाय

चक्रांतरितभास्कराय

दुष्टप्रमथनाय

पार्थप्रतिज्ञापरिपालकाय

सिन्धुराजशिरः पातस्थानवक्त्रे

विवेकदृशे

ओं सुभद्राशोकहरणाय नमः
द्रोणोत्सेकादिविस्मिताय
पार्थमन्युनिराकर्त्रे
पाण्डवोत्सवदायकाय
अङ्गुष्ठाक्रान्तकौन्तेय रथचक्राय
अहिशीर्षजिते
कालकोपप्रशमनाय
भीमसेनजयप्रदाय

ओं अश्वत्थामवधायासत्रातपाण्डुसुताय
कृतिने नमः
इषीकास्त्रप्रशमनाय
द्रौणिरक्षाविचक्षणाय
पार्थापहारितद्रौणिचूडामणये
अभङ्गुराय
धृतराष्ट्रपरामृष्टभीमप्रतिकृतिस्मयाय

भीष्मबुद्धिप्रदाय
शान्ताय
शरच्चन्द्रनिभाननाय १२०
गदाग्रजन्मने
पाञ्चालीप्रतिज्ञापरिपालकाय
गान्धारीकोपदृग्गुप्तधर्मसूनवे
अनामयाय
प्रपन्नार्तिभयच्छेत्रे
भीष्मशल्यव्यथापहाय

शान्ताय [ताय
शान्तनवोदीर्णसर्वधर्मसमाहि -
स्मारितब्रह्मविद्यार्थप्रीतपार्थाय
महाब्रह्मविदे १३०
प्रसादपरमोदाराय
गाङ्गेयसुगतिप्रदाय
विपक्षपक्षक्षयकृते
परीक्षित्प्राणरक्षणाय
जगद्गुरवे

ओं धर्मसूनोर्वाजिमेधप्रवर्तकाय नमः
विहितार्थाय
आप्तसत्काराय
मासकालपरिवर्तदाय
उत्तङ्कहर्षदाय १४०
आत्मीयदिव्यरूपप्रदर्शकाय
जनकावगतस्वोक्तभारताय
सर्वभावनाय

ओं असोढयादवोद्रेकाय नमः
विहिताप्तादिपूजनाय
समुद्रस्थापिताय
आश्चर्यमुसलाय
वृष्णिवाहकाय
मुनिशापायुधाय
पद्मासनादित्रिदशार्थिताय
सृष्टिप्रत्यवहारोत्कटाय

| | |
|---|---|
| स्वधामगमनोत्सुकाय | अनन्ताय |
| प्रभासालोकनोत्सुकाय | स्तुतिसन्तुष्टाय |
| नानाविधनिमित्तकृते | द्विजालोकनसन्तुष्टमानसाय |
| सर्वयादवसंसेव्याय | पुण्यतीर्थमहोत्सवाय |
| सर्वोत्कृष्टपरिच्छदाय | सत्काराह्लादिताशेषभूसुराय |
| वेलाकाननसञ्चारिणे | सुरवल्लभाय |
| वेलानिलहृतश्रमाय | पुण्यतीर्थाप्लुताय |
| कालात्मने | पुण्याय |
| यादवाय ९६० | पुण्यदाय |

ओं तीर्थपावनाय नमः
विप्रसात्कृतगोकोट्ये
शतकोटिसुवर्णदाय
स्वमायामोहिताशेषवृष्णिवीराय
विशेषविदे
जलजायुधनिर्दिष्ट्रे
स्वात्मावेशितयादवाय
देवताभीष्टवरदाय

१७० ओं कृतकृत्याय नमः
प्रसन्नधिये
स्थिरशेषायुतबलाय १८०
सहस्रफणिवीक्षणाय
ब्रह्मवृक्षवरच्छायासीनाय
पद्मासनस्थिताय
प्रत्यागात्मने
स्वभावार्थाय

| | |
|---|---|
| प्रणिधानपरायणाय | पुराणाय |
| व्याधेषुविद्धपूज्यांघ्रये | परमेशाय |
| निषादभयमोचनाय | पूर्णभूम्ने |
| पुलिन्दस्तुतिसन्तुष्टाय [ये | परिष्टुताय |
| दारुकार्पितपार्थादिकरणीयोक्त- | आद्यपतये |
| ईशित्रे | परस्मैब्रह्मणे |
| दिव्यदुन्दुभिसंयुक्ताय | परमात्मने |
| पुष्पवृष्टिप्रपूजिताय | परात्पराय १००१ |

॥ श्रीकृष्णसहस्रनामस्तोत्रम् सम्पूर्णम् ॥

---

3

# ॥ संस्कृतधातुमाला ॥

(महद्वीटिकाचतुष्टयमुद्रिता.)

संस्कृतभाषाव्यवहारार्थं नित्योपयुक्तानाम् पञ्चाशत् धातूनाम् कृत्प्रत्ययादिविविधपरिनिष्ठितरूपाणि पङ्क्तिक्रमेण सूचितानि. संस्कृताभ्यासिनाम् बहूपयुक्तानि भवन्ति । कतिचिदेव मुद्रितानि. ॥ ... रू. १-०-०

वाविळ्ळ रामस्वामिशास्त्रुलु अण्ड् सन्स्,

पोस्ट्बाक्स् १३५२ २९२, एस्प्लनेड्, चेन्नपुरी.